# ॥ श्रीगणेशाष्टोत्तरशतनामार्चनस्तोत्रम् ॥

श्री गणेशाय नमः ।
काश्यां तु बहवो विघ्नाः काशीवासवियोजकाः।
तच्छान्त्यर्थं ढुण्ढिराजः पूजनीयः प्रयत्नतः ॥ १॥

अष्टोत्तरशतैर्दिव्यैर्गणेशस्यैव नामभिः।
कर्तव्यमतियत्नेन नवदूर्वाङ्कुरार्पणम् ॥ २॥

हिरण्मयतनुं शुद्धं सर्वार्तिहरमव्ययम्।
वरदं गणपं ध्यात्वा पूजा कार्या प्रयत्नतः ॥ ३॥

ऋषिर्विघ्नेशः इत्यादिनाम्नां सर्वेश्वरः शिवः ।
देवता विघ्नराजोऽत्र छन्दोऽनुष्टुप् शुभप्रदम् ॥ ४॥

सर्वप्रत्यूहशमनं फलं शक्तिः सुधात्मिका ।
कीलकं गणनाथस्य पूजा कार्येति कामदा ॥ ५॥

विघ्नेशो विश्ववदनो विश्वचक्षुर्जगत्पतिः।
हिरण्यरूपः सर्वात्मा ज्ञानरूपो जगन्मयः ॥ ६॥

ऊर्ध्वरेता महाबाहुरमेयोऽमितविक्रमः ।
वेदोवेद्यो महाकायो विद्यानिधिरनामयः ॥ ७॥

सर्वज्ञः सर्वगः शान्तो गजास्यो विगतज्वरः ।
विश्वमूर्तिरमेयात्मा विश्वाधारः सनातनः ॥ ८॥

सामगानप्रियो मन्त्री सत्वाधारः सुराधिपः ।
समस्तसाक्षिनिर्द्वन्द्वो निर्लिप्तोऽमोघविक्रमः ॥ ९॥

नियतो निर्मलः पुण्यः कामदः कान्तिदः कविः ।
कामरूपी कामवेषो कमलाक्षः कलाधरः ॥ १०॥

सुमुखः शर्मदः शुद्धो मूषकाधिषवाहनः ।
दीर्घतुण्डधरः श्रीमाननन्तो मोहवर्जितः ॥ ११॥

वक्रतुण्डः शूर्पकर्णः पवनः पावनो वरः ।
योगीशो योगिवंद्यांघ्रिरुमासूनुरघापहः ॥ १२॥

एकदन्तो महाग्रीवः शरण्यः सिद्धिसेवितः ।
सिद्धिदः करुणासिन्धुर्भगवान् भव्यविग्रहः ॥ १३॥

विकटः कपिलो ढुण्ढिरुग्रो भीमो हरः शुभः ।
गणाध्यक्षो गणाराध्यो गणेशो गणनायकः ॥ १४॥

ज्योतिःस्वरूपो भूतात्मा धूम्रकेतुरनाकुलः ।
कुमारगुरुरानन्दो हेरम्बो वेदसंस्तुतः ॥ १५॥

नागोपवीती दुर्धर्षो बालदूर्वाङ्कुरप्रियः ।
भालचन्द्रो विश्वधामा शिवपुत्रो विनायकः ॥ १६॥

लीलावलम्बितवपुः पूर्णः परमसुन्दरः ।
विद्यान्धकारमार्तण्डो विघ्नारण्यदवानलः ॥ १७॥

सिन्दूरवदनो नित्यो विष्णुः प्रमथपूजितः ।
शरण्यदिव्यपादाब्जो भक्तमन्दारभूरुहः ॥ १८॥

रत्नसिंहासनासीनो मणिकुण्डलमण्डितः ।
भक्तकल्याणदोऽमेयकल्याणगुणसंश्रयः ॥ १९॥

एतानि दिव्यनामानि गणेशस्य महात्मनः ।
पठनीयानि यत्नेन सर्वदा सर्वदेहिभिः ॥ २०॥

नाम्नामेकैकमेतेषां सर्वसिद्धिप्रदायकम् ।
सर्वविघ्नेशनाम्नां तु फलं वक्तुं न शक्यते ॥ २१॥

एकैकमेव तन्नाम दिव्यं जप्त्वा मुनीश्वराः ।
प्रत्यूहमात्ररहितास्तिष्ठन्ति शिवपूजकाः ॥ २२॥

दूर्वायुग्मानि सङ्गृह्य नूतनान्यतियत्नतः ।
पूजनीयो गणाध्यक्षो नाम्नामेकैकसंख्यया ॥ २३॥

नभस्यशुक्लपक्षस्य चतुर्थ्यां विधिपूर्वकम् ।
वक्रतुण्डेशकुण्डे तु स्नानं कृत्वा प्रयत्नतः ॥ २४॥

वक्रतुण्डेशमाराध्यं सर्वाभीष्टप्रदायकम् ।

ध्यायेदधहरं शुद्धं काञ्चनाभमनामयम् ॥ २५॥

ततः पूजा यथाशास्त्रं कृत्वा दूर्वाङ्कुरैर्नवैः ।
पूजा कार्या विशेषेण नामोच्चारणपूर्वकम् ॥ २६॥

ततश्च मोदकैर्दिव्यैः सुगन्धैघृतपाचितैः ।
नैवेद्यं कल्पयेदिष्टं गणेशाय शुभावहम् ॥ २७॥

अन्यैश्च परमान्नाद्यैर्भक्ष्यैर्भोज्यैर्मनोहरैः ।
तोषणीयः प्रयत्नेन वक्रतुण्डो विनायकः ॥ २८॥

प्रदक्षिणनमस्कारा दिव्यतन्नामसंख्यया ।
कर्तव्या नियतं शुद्धैर्मौनव्रतपरायणैः ॥ २९॥

ततः संतर्प्य विधिवच्छैवान् ब्राह्मणसत्तमान् ।
पुनरभ्यर्च्य विघ्नेशमिमं मन्त्रमुदीरयेत् ॥ ३०॥

वक्रतुण्ड सुराराध्य सूर्यकोटिसमप्रभ ।
निर्विघ्नेनैव सततं काशीवासं प्रयच्छ मे ॥ ३१॥

इति सम्प्रार्थ्य विधिवत् पूजां कृत्वा पुनर्मुदा ।
नमस्कृत्वा प्रसाद्यैनं गच्छेत् ढुण्ढिविनायकम् ॥ ३२॥

ढुण्ढिराजार्चनं सम्यक् कर्तव्यं विधिपूर्वकम् ।
तत्रैव च विशेषेण पूजां कृत्वा ततः परम् ॥ ३३॥

पूजनीयाः प्रयत्नेन सर्वदा मोदकप्रियाः ।
शिवप्रीतिकरा नित्यं शुद्धाः पञ्च विनायकाः ॥ ३४॥

क्षिप्रसिद्धिप्रदं क्षिप्रगणेशं सुरवन्दितम् ।
सम्पूज्य पूर्ववत्सम्यक् गच्छेदाशाविनायकम् ॥ ३५॥

आशाविनायकं सम्यक् पूजयित्वा ततः परम् ।
अर्कविघ्नेश्वरः सम्यक् पूजनीयः प्रयत्नतः ॥ ३६॥

पूर्ववत्पूजनीयः स्यात्ततः सिद्धिविनायकः ।
पूजनीयस्ततः सम्यक् चिन्तामणिविनायकः ॥ ३७॥

सेवाविनायकोऽप्येवं सम्पूज्यस्तदनन्तरम् ।
दुर्गाविनायकस्यापि पूजा कार्या ततः परम् ॥ ३८॥

एवं सम्पूज्य विधिवद्भक्तिश्रद्धासमन्वितैः ।
शैवाः शङ्करतत्त्वज्ञा भोजनीयाः प्रयत्नतः ॥ ३९॥

एवं सम्पूजिताः सम्यक् प्रीतास्ते गणनायकाः ।
काशीवासं प्रयच्छन्ति निर्विघ्नेनैव सादरम् ॥ ४०॥

आज्येन कापिलेनैव सार्धलक्षत्रयाहुतीः ।
हुत्वैतन्नामभीः सम्यक् सर्वविद्याधिषो भवेत् ॥ ४१॥

एतानि दिव्यनामानि प्रतिवासरमादरात् ।
पठित्वा गणनाथस्थ पूजा कार्या प्रयत्नतः ॥ ४२॥

यस्यकस्यापि सन्तुष्टो गणपः सर्वसिद्धिदः ।
अत एव सदा पूज्यो गणनाथो विचक्षणैः ॥ ४३॥

गणेशादपरो लोके विघ्नहर्ता न विद्यते ।
तस्मादन्वहमाराध्यो गणेशः सर्वसिद्धिदः ॥ ४४॥

काशीनिवाससिद्ध्यर्थं विष्णुना पूजितः पुरा ।
पुरा विघ्नेश्वरः सम्यक्पूजितो दण्डपाणिना ॥ ४५॥

कर्कोटकेन नागेन गणेशः पूजितः पुरा ।
शेषेण पूजितः पूर्वं गणेशः सिद्धिदायकः ॥ ४६॥

काशीयात्रार्थमुद्युक्तो विधिर्विघ्नकुलाकुलः ।
पूजयामास विघ्नेशं विधिवद्भक्तिपूर्वकम् ॥ ४७॥

सूर्येणाभ्यर्चितः पूर्वं चन्द्रेणेन्द्रेण च प्रिये ।
देवैरन्यैश्च विधिवत्पूजितो गणनायकः ॥ ४८॥

मर्त्यानाममराणां च मुनिनां वा वरानने ।
न सिद्ध्यन्त्येव कार्याणि गणेशाभ्यर्चनं विना ॥ ४९॥

इति श्री शिवरहस्यान्तर्गतकाशीमाहात्म्ये
हरगौरीसंवादे गणेशाष्टोत्तरशतनामार्चनस्तोत्रं सम्पूर्णम् ।